दर्शितामात्रिचर्मराजादयः विहिता तैर्मे प्रतिपत्तिः सन्मानिताः प्रत्येकं मया गताः पदातिभाव निर्मुक्तं रिपुनिराकरणे सह चतुरङ्गसे
नया ॥ ततस्तेषां समुल्लसमाटोपं रणशालिनाम् । प्रत्येकं प्रभुणा राज्ञा, कृतं सन्मानतोषणम् ॥ २६५ ॥ दूरादेव भयोद्भ्रान्ता, महा
मोहादयस्त्वरा । पापोदय पुरस्कृत्य, नष्टास्ते मृत्युभीरवः ॥ २६६ ॥ तैस्तु भग्नाखवाधासाः, शोधिता सा महाटवी । रिपुनाम्नेन कम्पा
च, लोके जयपताकिका ॥ २६७ ॥ केवलं ते दुरात्मानः, किंचित्क्षयमुपागताः । किंचित्प्रशान्ततां भूत्वा, संस्थिता चकचर्यया ॥ २६८ ॥
ततो महाविमर्देन, विवाहोऽतिमनोरमः । प्रारब्धो मे तदा कर्तुं, मुनिताम्बरबान्धवैः ॥ २६९ ॥ स्थापिताः प्रथमं तावत्त्वष्टौ मात
मातरः । तासां च विहिता पूजा, प्रयत्नेन यथोचिता ॥ २७० ॥ निवेदितं च मे तीर्थं, सद्बोधेन पृथक् पृथक् । मातृणां चरितं तासां,
तच्चे भद्रे! निवेदये ॥ २७१ ॥ "माता हि कुरुते माता, पुरमात्रप्रलोकिनम् । मुनिलोकं पुरे जैने, मार्गे व्याक्षेपवर्जितम् ॥ २७२ ॥
"सद्बुद्धिपूर्ववाक्येन, तथ्यं पथ्यं मिताक्षरम् । द्वितीया भाषयत्येवं, माता यतिजनं सदा ॥ २७३ ॥ तृतीयमाता निःशेषदोषनिर्मुक्तम
"न्नता । आहारमेषयत्येव, यतिलोकेन कारणे ॥ २७४ ॥ चतुर्थमाता मुनिभिः, सुदृष्टं सुप्रमार्जितम् । पात्राद्यादाननिक्षेपं, कारयन्ती
"विजृम्भते ॥ २७५ ॥ यत्किंचित्त्याज्यपरित्याज्यं, देहाहारमलादिकम् । स्थण्डिले पञ्चमी माता, समीत्या त्याजयत्यलम् ॥ २७६ ॥ षष्ठी
"माता पुनर्नित्यं, साधुचित्तमनाकुला । रक्षन्ती क्षपयत्येव, दोषसङ्घातमञ्जसा ॥ २७७ ॥ सप्तमी कारणाभावे, माता मौनविधायिका ।
"साधूनां कारणे वाक्यदोपरक्षणतत्परा ॥२७८॥ अष्टमी कूर्मवल्लीन, मुनिलोकमकारणे । कारणे कायदोषविमुक्तचारिका ॥२७९॥"
तदिमा मातरस्तत्र, स्थापिताः प्रथमे दिने । पूजिताश्च विधानेन, जैनसत्पुरसारिकाः ॥ २८० ॥ ततश्चित्तसमाधाने, सत्रैव परमण्डपे ।
सैव निःस्पृहता वेदिर्विहितेषा समारिता ॥ २८१ ॥ विनिर्मितं च धर्मेण, प्रदीप्तं निजतेजसा । तत्राग्निकुण्डं विस्तीर्णं, कृत सर्व यथो-

रमेन भगवतां भवतां सर्वमस्य संपत्स्यते तस्मात्कालमापन्नो कुर्वन्तस्तावदस्मत्सेवया तिष्ठत यूयं, यदा तु भवतां प्रस्तावो भविष्यति तदा-ऽहमेव निवेदयिष्ये, इत्यादयो हि मम तत्प्रयोजने सकलकालमहं वर्ते, का भवतां चिन्ता ?, ततस्तदनुरोधेनोपसहृतवद्भिः प्रकटसद्भामावम्भः, केवलं तथापि तदवया प्रयुक्ता एव तैः प्रच्छन्नमभिरेरपि निजनिजा योगशक्तयः, ततस्तन्माहात्म्येन संजाता मम चेतसि कल्लोला—यथेयमादिष्टा भगवता चतुर परिणीतासु तासु कन्यकासु भवत्तमहं प्रमादयिष्ये "अतिदुष्करा च प्रव्रज्या तुल्या बाहुभ्यां समुद्र' प्रवरस्येन नैष्ठिकं मत्सनुष्ठानं सुकुमारं च मे शरीरं समर्थितो रोगावहाः तत्र क्षमिष्यते मायो दीर्घकालं मे रूपसुपिता कायत्वरया "च वराकी मदनमञ्जरी भाविष्यते प्राणीसता यावज्जीविकमदीयवियोगेन इत्यादि चिन्तयतश्च मे संजातो मनाक् मनोभङ्गः, ततश्चि"न्तितं मया—यत् किं न परिणयामि तावदेताः तिष्ठामि यथासुखासिकया गमयामि यौवनं स्वाधीनाश्च ममैताः ततः पश्चात्काले परि' पीय प्रव्रजिष्यामीति," अयं च सर्वोऽपि दूरवर्तिनि सद्बोधे मम स्वगतः पर्यालोचः, अत्रान्तरे समागतः सद्बोधः निवेदितो मयाऽस्मै निजाभिप्रायः, सद्बोधः प्राह—देव ! न सुन्दरमिदं मन्त्रितं देवेन अविकलमिदमात्मविद्रसम विषम्पर्क सुखसन्दोहानां चिह्नमेतत्प्रव्रज्या न च स्वाभाविकमेवस्वरूपं देवस्य, किं तर्हि ?, विलसितमिदं तेषां पापात्मनां महामोहादीनां, ते हि निधिग्रहणकाले इव वेतालाः पश्चुपस्थिताः साम्प्रतं कन्यानार्मीना विघ्नकरणाय देवस्य तत्र वचनीयमेवेत्थमा देवेन, ततो हर्षं सद्बोधमापितं मयिते, अभिहितं च मया—आर्य ! कथं पुनरमी निराकर्तव्याः, सद्बोधेनोक्तं—देव ! निर्मलेन, मयोक्तं—दर्शय मे निमर्कं, सद्बोधेनोक्तं—एष समोऽस्मि केवलं तद्दर्शने कर्मपरिणामस्याधिकारः, कर्मपरिणामेनोक्तं—आर्य ! मयाऽऽदिष्टेन त्वयाऽमी वर्णिताः परमार्थतो मयैव ते दर्शिता न सन्ति तस्मा कन्येषु विकल्पं दर्शयतार्थ, सद्बोधेनोक्तं—यथादिशति महाराजः, ततः प्रवेशितोऽहं सद्बोधेन चित्तसमाधानमण्डपे

सूचितो मम । भगवद्भिर्मया हन्त, साक्षादेवानुभूयते ॥ ३९५ ॥ मासबैवं प्रमोदाढ्यः, सप्रमोदे तदा पुरे । स्थितोऽहं तत्र संप्राप्तास्ता-वन्निर्मलसूरयः ॥ ३९६ ॥ स्थिताः सपरिवारास्ते, तत्रैवाह्लादमन्दिरे । गत्वा समस्तसामग्र्या, वन्दिताः सादरं मया ॥ ३९७ ॥ ततो विधाय नम्रेण, छ्लाटे करकुड्मलम् । भद्रे! भगवतामग्रे, मयेदं भाषितं तदा ॥ ३९८ ॥ सर्वो भगवतादेशः, संपन्नः साम्प्रतं यथि । नाथ! तदीयतां दीक्षा, प्रसादः क्रियतामिति ॥ ३९९ ॥ सूरिराह महाराज!, सपन्ना तव भावतः । सतो भागवती दीक्षा, तस्याः किं दीयतेऽधुना? ॥ ४०० ॥ तथाहि—यदेतत्तव सपन्न, गृहेऽपि वसतोऽधुना । द्रव्यमेव विधातव्यं, यतिस्तेऽपि विशेषतः ॥ ४०१ ॥ त-थापि व्यवहारोऽत्र, लङ्घनीयो न पण्डितैः । मतस्ते साम्प्रतं भूप!, द्रव्यलिङ्गं विधीयते ॥ ४०२ ॥ किं च—भावलिङ्गबहिर्भिन्नमिद हेतुरपीष्यते । तदीयते महाराज!, लिङ्गं ते द्रव्यतोऽधुना ॥ ४०३ ॥ मयोक्तं—नाथ! महाप्रसादः, ततो "विधायाष्ट दिनानि जिन "भुमिपूजां समुत्पाद्य नागरकानन्दं संमान्य बन्धुवर्गं पूरयित्वाऽर्थिसङ्घातं स्थापयित्वा निजसुतं जनतारणाभिधानं राज्ये समाप्य सत्का "लोचितं निःशेषं कृत्यविधिं सह मदनमञ्जर्या गुरु कुलंभरेण प्रधानपरिजनेन च निष्क्रान्तो निर्मलसूरिपादमूले विधानेनाहमिति, "ततोऽभ्यस्तः समस्तः साधुक्रियाकलापः एकीभूतो गाढतरं सदागमः शिक्षितानि बहुविधान्येकावशाङ्गानि कालिकोत्कालिकश्रुतानि च "तथाऽभीष्टतरीभूतः सम्यग्दर्शनः सञ्जातश्चारित्रधर्मे चित्ताबन्धः विधात विशेषतश्चास्तैन्यं पालितौ निसर्गं संयमतपोयोगौ ममानि सुचरां "प्रमत्ततानदादीनि रिपुकीलस्थानानि निर्मलीकृत्वा चित्तवृत्तिः, तदेवं गुरुचरणशुश्रूषारतो विहृतोऽहं भूरिकालं मुनिपर्याये"ति, पर्यन्ते वि हिता संलेखना कृतमनशनविधानं सद्दर्शनानुष्ठाने मे भवितव्यता तथाऽपरा गुटिका तत्तेजसा नीतोऽहं विबुधालये कल्पातीतेषु विबुधेषु स्थापितः प्रथमग्रैवेयके, तत्र च—मनोहारिणि पर्यङ्के, दिव्ये दिव्यांशुकावृते । शुभ्रातिनिर्मलाकारः, स्थितोऽहममृतोपमे ॥ ४०४ ॥ त

षिकम् ॥ २८२ ॥ वैवसीपपद्मप्रभिर्जननीमिव सादरम् । सानाङ्गरागभूषादि, कभूत्म विनिर्मितम् ॥ २८३ ॥ वादित्र तथाऽऽरे,
सर्वैः सामन्वपार्थिवैः । स्थापितोऽहं विविष्टम, भूषितो वासितोऽशुकैः ॥ २८४ ॥ ततः प्रभूता विवाहानन्द स्थितः सद्राव पर पुप
दिवः हूयन्ते कर्मनामिकाः समिधः क्षिप्यन्ते सन्मार्गनाहुतयः विषीयन्ते कुवासनाभिधाना लाजाञ्जलयः, ततः कारितोऽहं सरागमहेर
सांसारिकां मण्डपाऽविसुन्दरे कूपकारो पाणिग्रहण भ्रान्तिवारिकायाः, भयान्तरेऽतिदर्पेण विजृम्भिताः शुभपरिणामादयः विलसिता
निष्प्रकम्पतादयः प्रवृत्तो महामोहः भ्रान्तानि मण्डलानि, एव च क्रमेण तस्मिन्नेव दूरलग्ने परिणीताः शेषा मयि मयाऽन्यो दर्पादिक-
न्यकाः, उपविष्टः सविपत्ताभिस्तस्मिन्नेव जीववीर्यनामके विस्तीर्णे वरासने, ततः समानन्दिताः शरीरप्रभवराजादयः प्रभूता विविपाक-
हिंसाः, एवम्—यथैव विपा सा कन्या, परिणीता मया पुरा । तथैवासौ महामोहः, प्रवीनः परमाधवः ॥ २८५ ॥ किं तु—स
मेषां समुदायात्मा, सारभूतः स वर्तते । दुष्परमुसमाकारस्तेन पार्श्वे स मे स्थितः ॥ २८६ ॥ यदा तु परिणीतास्ताः, क्षान्त्यादिकदम्ब-
न्यकाः । सर्वा वैश्वानराद्दीनां, प्रतिपक्षतया स्थिताः ॥ २८७ ॥ तदा सोऽन्तीकसहितः, पापोदयसमन्वितः । चारित्रधर्मराजादिनाशितो-
ऽपि तथा पुरा ॥ २८८ ॥ हीनोऽपि हीनतरतां, हिंसावैश्वानरादिभिः । सार्धं तेनधभिव्यासादूरदूरतरं गतः ॥ २८९ ॥ त्रिविर्विशिपकम् ।
तथाभिवेषु तेषूचैः, सान्त्वापायः प्रमोदितः । चारित्रो वरनारीभिः, ससैन्यपरिवारितः ॥२९०॥ अन्यदा विलासेन, समधुरामतीतया ।
ससंवरनवो नेत्र, तदा सत्वं मुनेर्बन्धः ॥ २९१ ॥ तथा शुभपरिणामस्य, मयाऽन्या अपि कन्यकाः । तन्निष्प्रकम्पताजातास्ता बहवो
विवाहिताः ॥ २९२ ॥ पचाश्च ता धृतिश्रद्धामेधाविविदिषासुखाः । मैत्रीप्रमुदितोपेक्षाविज्ञप्तिकरुणादिकाः ॥ २९३ ॥ ततस्तेन सुधा-
र्णवां, शन्तेन सह क्रीडया । भवर्ग निर्भरीभूता, सखवो मे सुवासिता ॥ २९४ ॥ चिन्तितं च मया—रा एष सुखसन्दोहो, यः पूर्वं

सूचितो मम । भगवन्निर्मया हन्त, साक्षादेवानुभूयते ॥ ३९५ ॥ यावच्चैव प्रमोदाढ्यः, सम्प्रमोदे तदा पुरे । स्थितोऽहं तत्र संमाताख्या-
वसिर्मलसूरयः ॥ ३९६ ॥ स्थिताः सपरिवारास्ते, तत्रैवाह्लादमन्दिरे । गत्वा समस्तसामग्र्या, वन्दिताः सादरं मया ॥ ३९७ ॥ ततो
विधाय नम्रेण, ललाटे करकुड्मलम् । भद्रे! भगवतामग्रे, मयेदं भाषितं तदा ॥ ३९८ ॥ सर्वो भगवदादेशः, संपन्नः साम्प्रतं यदि ।
नाथ! तदीयतां दीक्षा, प्रसादः क्रियतामिति ॥ ३९९ ॥ सूरिराह महाराज!, संपन्ना तव भावतः । स्वतो भागवती दीक्षा, तस्याः किं
दीयतेऽधुना? ॥ ४०० ॥ तथाहि—यदेतत्तव संपन्नं, गृहेऽपि वसतोऽधुना । इदमेव विधातव्यं, यतित्वेऽपि विशेषतः ॥ ४०१ ॥ त
थापि व्यवहारोऽयं, लङ्घनीयो न पण्डितैः । भवस्ते साम्प्रतं भूप!, द्रव्यलिङ्गं विधीयते ॥ ४०२ ॥ किं च—भावलिङ्गवहिर्मिलमिदं
देहेऽपरीप्यते । तदीयते महाराज!, लिङ्गं ते द्रव्यतोऽधुना ॥ ४०३ ॥ मयोक्तं—नाथ! महाप्रसादः, ततो "विधायाष्ट दिनानि जिन-
"मुनिपूजां समुत्पाद्य नागरकानन्दं संभाष्य बन्धुवर्गं पूरयित्वाऽर्थिसङ्घातं स्नापयित्वा निजसुतं जनतारणाभिधानं राज्ये समाप्य तत्का
"लोचितं निःशेषं कृत्यविधिं सह मदनमञ्जर्या युक्तः कुलन्धरेण प्रधानपरिजनेन च निष्क्रान्तो निर्मलसूरिपादमूले विधानेनाहमिति,
"ततोऽभ्यस्तः समस्तः साधुक्रियाकलापः पश्चीभूतो गाढतरं सदागमः शिक्षितानि तदुपदिष्टान्येकादशाङ्गानि कालिकोत्कालिकश्रुतानि च
"तथाऽभीष्टतरीभूतः सम्यग्दर्शनः सञ्जातश्चारित्रधर्मे भिलाभन्धः विज्ञात विशेषतस्तत्सैन्यं पालितौ नितरां संयमतपोयोगौ मथानि सुतरां
"प्रमत्ततानदादीनि रिपुञ्जीवस्थानानि निर्मलीकृता चित्तवृत्तिः, तदेव गुरुचरणशुश्रूषारतो विहृतोऽहं सूरिकालं मुनिपर्यये"ति, ततन्ते वि
हिता संलेखना कृतमनशनविधानं तद्दर्शनानुष्ठ्य मे भवितव्यता तथाऽपरा गुटिका ततेजसा नीतोऽहं विबुधालये कल्पातीतेषु विबुधेषु
भाषितः प्रथममैवेयके, तत्र च—मनोहारिणि पर्यङ्के, दिव्ये दिव्यांशुकावृते । शुभ्रातिनिर्मलाकारः, स्थितोऽहममृतोपमे ॥ ४०४ ॥ त-

स्सागरोपमाण्युच्चैस्तपोविंशतिमुत्तमम् । शान्तात्मा विगताबाधमनुभूय सुखामृतम् ॥ ४०५ ॥ ततो मनुजगत्यन्तःपातुक वरपारम् । त-
दैरवतमासाद्यो, भद्रे¹ मार्गानियोगतः ॥ ४०६ ॥ तत्र सिंहपुरे जातः, सुतो वीणामहे नृपो । भद्र गङ्गाधरो नाम, क्षत्रियः
क्षात्रपौरुषः ॥ ४०७ ॥ जातिस्मरणसंपन्नो, दीक्षामादाय सुन्दराम् । कृत्वा च पूर्ववत्कल्पं, सुघोषायामभिधो ॥ ४०८ ॥ तदन्ते च
विधानेन, पूर्वस्मादधिकक्रमात् । ग्रैवेयके द्वितीयेऽहं, गतो मार्गानियोगतः ॥ ४०९ ॥ परिपाट्याऽनया भद्र¹, कृताः पञ्च गमागमाः ।
मायातीर्थं समाराध्य, ग्रैवेयकनिवासिषु ॥ ४१० ॥ एकैकपृष्ठा सञ्जाता, स्थितिस्तत्र ममानघे¹ । सागरोपमतो यावत्सप्तम सप्तविंशतिः
॥ ४११ ॥ शरीरचित्तनिर्वाणी, शर्मसन्दोहदायिका । इह तत्र च जाता मे, वार्ता कल्याणमालिका ॥ ४१२ ॥ ततश्च चम्पावासो,
भरते धातुनामके । पुरे मनुजगत्यन्तर्वर्तिकीडम्बमण्डले ॥ ४१३ ॥ पुत्रो भद्रामहागिर्योर्जातोऽहं सिंहनामकः । नरेन्द्रवंशे सद्भोगः,
सुन्दराम्बरधारकः ॥ ४१४ ॥ अथ यौवनसंरम्भेन, धर्मबन्धुमहामुनिम् । प्राप्य भागवती दीक्षा, मयाऽऽत्ता वरलोचने¹ ॥ ४१५ ॥ ततः
क्रियाकलापेन, साधूनां चारगामिनि¹ । विहितोऽत्र उपसद्भावः, सूत्रार्थग्रहणोद्यतः ॥ ४१६ ॥ अथ स्वल्पेन कालेन, द्वादशाङ्गः सदा-
गमः । सपूर्वः सविवेको मे, सर्वथा सम्मुखं गतः ॥ ४१७ ॥ पुराऽप्यस्य मया ज्ञात, विज्ञानं बहुशो बहु । किं तु संपूर्णपूर्वाणि, न
ज्ञातानि कदाचन ॥ ४१८ ॥ तदा तु लोककालेन, विज्ञान लीलया मया । निःशेषमस्य विज्ञातं, सर्वं पूर्वैः समन्वितम् ॥ ४१९ ॥
ततोऽधिगतसूत्रार्थो, गुरुणा धर्मबन्धुना । स्थापितोऽहं निजस्थाने, स(सू)रिधाम्न पायतः ॥ ४२० ॥ ततश्च शरदानन्दो, देवदानव
मानवैः । आचार्यस्थापनायां मे, उपमस्कारकारकः ॥ ४२१ ॥ गुरुणा क्षेपलोकैश्च, स्थापितोऽहं महोत्सवः । धन्यस्त्वं कृतकृत्योऽसि,
मेव जातः सदागमः ॥४२२॥ तथा—यथाकथाहारमात्स्यैश्च, पूजिता लोकता यदा । विहिता सत्पूजा च, विधिना वसनासनैः ॥४२३॥

किं च—ते देवास्ते महाभागा, मुनयस्ते च सज्जनाः । समाकृष्टा गुणैः सर्वैर्नम्राः किङ्करतां गताः ॥ ४२४ ॥ तथाऽन्येवासिनोऽनेके,
पण्डिता विनयोद्यताः । स्वीया गच्छान्तरेभ्यश्च, मम पार्श्वमुपागताः ॥ ४२५ ॥ ततो विचरतश्चित्रमासाकरपुरादिषु । कुर्वतश्च प्रबन्धेन,
व्याख्यानमतिसुन्दरम् ॥ ४२६ ॥ अनेकवादसङ्घट्टलब्धो वाक्सङ्घयष्टिना । कुतीर्थिमत्तमातङ्गकुम्भनिर्भेदकारिणः ॥ ४२७ ॥ स्वशास्त्रपर
शास्त्राणां, स्फुटगर्भार्थदर्शिनः । पूजितस्य महाराजसामन्तपरमेश्वरैः ॥ ४२८ ॥ उद्दामवर्णसत्कीर्तिशब्दश्लाघापुरःसरः । धवलितो यशो
रूपो, जनैर्मे पटहोऽनघ ॥ ४२९ ॥ चतुर्भिः कलापकम् ॥ तथा—धन्योऽसि कृतकृत्योऽसि, भूषिता नाथ! मेदिनी । त्वयाऽवतरता मर्त्ये,
परमब्रह्मरूपिणा ॥ ४३० ॥ निर्भिद्य सत्पाण्डित्यमित्येवं नतमस्तकाः । तीर्थिका अपि मां सर्वे, स्तुवन्तः पर्युपासते ॥ ४३१ ॥ युग्मम् ।
एवमाचार्यके जाते, सर्वलोकमनोहरे । भद्रेऽगृहीतसङ्केते', यज्जातं तन्निबोध मे ॥ ४३२ ॥ तां तादृशीं समुद्वीक्ष्य, समृद्धिं शुभनाभु
ताम् । ईर्ष्ययेव महापापा, स्फुटा मे भवितव्यता ॥ ४३३ ॥ चिन्तितं च तया हन्त, प्रक्षिप्ताः पुरा मया । योऽसावयसरस्तेषां, महामो
हादिभूभुजाम् ॥ ४३४ ॥ स एष वर्तते कालः, साम्प्रतं कार्यसाधकः । आशाभृतो वराकास्ते, पुरा मद्वाक्यतः स्थिताः ॥ ४३५ ॥ तदेषां
लब्धयाम्येन, भक्षावमधुनातनम् । येन ते लब्धमाहात्म्या, आयन्ते सुखभाजनम् ॥ ४३६ ॥ त्रिभिर्विशेषकम् । एवं निश्चित्य ते सर्वे, भद्रे!
पापोदयादयः । ज्ञापिताः कार्यगर्भार्थं, भवितव्यतया तया ॥ ४३७ ॥ किं च—ते कर्मपरिणामाद्यास्ते च मे बान्धवोऽनघाः । विमूढा नष्ट
चेष्टाकाः, स्वस्वचर्या विविधाख्यया ॥ ४३८ ॥ ततश्च—पापोदय पुरस्कृत्य, महामोहादयस्तथा । पुनः सस्थापनां कृत्वा, मद्भृता मम स-
म्मुखम् ॥ ४३९ ॥ केवलं व्याधसङ्कैस्तैर्दृष्टात्मस्वभयैः पुरा । कः स्यान्नो विजयोपाय, इति प्रारब्धि मन्त्रणम् ॥ ४४० ॥ "विपयाभिला
"षेणोक्त—इदमत्र प्राप्तकालं—अभ्यर्णीभवतु तावदस्य समीप्यावर्षनो ज्ञानसवरणः निकटीभवन्तु चौडरामसहितानि गौरवाभिधानानि

सागरोपमाण्युच्चैर्यावद्भावसुत्तमम् । भ्रान्त्वाऽस्मा विगताबाधमनुभूय सुधामृतम् ॥ ४०५ ॥ ततो मनुजगत्यन्त पाटुक वरपाटकम् । ऊ-
ढेरावतमायातो, भद्रे¹ मार्गानियोगतः ॥ ४०६ ॥ तत्र सिंहपुरे जातः, सुतो वीणामहेन्द्रयोः । भद्रं गङ्गाधरो नाम, क्षत्रियः
क्यातपौरुषः ॥ ४०७ ॥ जातिस्मरत्वसम्पन्नो, दीक्षाभावाय सुन्दरम् । कृत्वा च पूर्ववत्कृत्य, सुघोषापायसन्निधौ ॥ ४०८ ॥ तदन्त च
विधानेन, पूर्वम्यायर्पितक्रमात् । ग्रैवेयके द्वितीयेऽहं, गतो मायानियोगतः ॥ ४०९ ॥ परिपाट्याऽनया भद्र¹, कृताः पञ्च गमागमाः ।
मानवीयां समुत्ताय, ग्रैवेयकनिवासिषु ॥ ४१० ॥ एकैकस्मा सजाता, स्थितिश्च ममानघ¹ । सागरोपमतो यावत्सप्तम सप्तविंशतिः
॥ ४११ ॥ सदीर्घचित्तनिर्वाणी, सर्वसन्तोषदायिका । इह यत्र च जाता मे, भार्या कल्याणमालिका ॥ ४१२ ॥ ततश्च पञ्चमायातो,
भरते भानुनामके । पुरे मनुजगम्यत्पाँशकीर्ण्यमण्डले ॥ ४१३ ॥ पुत्रो भद्रामहागिर्योर्जातोऽहं सिंहनामकः । नरेन्द्रवंशे सद्भोगः,
सुन्दराकारधारकः ॥ ४१४ ॥ अथ यौवनसत्त्वेन, धर्मबन्धुमहामुनिम् । प्राप्य भागवती दीक्षा, मयाऽऽप्ता वरलोचने¹ ॥ ४१५ ॥ ततः
क्रियाक्रमयोगेन, साधूनां भारुगामिमि¹ । विद्वतोऽहं सतस्वभावः, सूत्रार्थमहदपोमतः ॥ ४१६ ॥ अथ सत्येन कालेन, द्वादशाङ्गः सदा-
गमः । सपूर्वः साविक्षेपो मे, सर्वेमा सम्पूर्णो गतः ॥ ४१७ ॥ पुराऽभ्यस्य मया सार्थ, विज्ञान पटुशो बहु । किं तु सपूर्वपूर्वाणि, न
माशानि क्यापन ॥ ४१८ ॥ तदा तु स्तोककालेन, विज्ञान लीलया मया । निःक्षेपमस्य विज्ञार्थ, सव पूर्वैः समन्वितम् ॥ ४१९ ॥
ततोऽधिगतसूत्रार्थो, गुरुणा धर्मबन्धुना । स्थापितोऽहं निजस्थाने, स(भ)रिसङ्घस्य पश्यतः ॥ ४२० ॥ ततश्च शशाननो, देवदानव
मानवैः । आचार्यस्थापनायां मे, सनमस्कारकारकः ॥ ४२१ ॥ गुरुणा क्षेपलोकेन, स्थापितोऽहं महर्षिभिः । धन्यस्त्व कृतकृत्योऽसि,
येन प्राप्तः सदागमः ॥४२२॥ तथा—वमास्करारत्वास्तैश्च, पूजिता लोकबान्धवाः । विहिता महापूजा च, विधिना वसनादनैः ॥४२३॥

"पात्राद्यपत्रपा । अहं पूज्यो जने मां हि, वन्दन्ते देवदानवाः ॥ ४५५ ॥ ममाभिमानतः सर्वा, विद्यन्ते मानभूतयः । इत्युत्सेकपरो
"भूत्वा, मार्दयामि च मानिनीः ॥४५६॥ युग्मम् । तथा—आस्वादितेषु भक्ष्येषु, रसेषु परमा रतिः । आविर्भूताऽतिलौल्यात्मे, प्रार्थनाऽ-
"नागतेषु च ॥ ४५७ ॥ शय्यासनादिसंपाद्ये, वस्त्राहारादिगोचरे । सुखे शारीरिके बोधः, प्राप्ते लौल्यं च भाविनि ॥ ४५८ ॥ जाता मे
"त्रितयस्यापि, तदानीं वक्त्रवर्तिनः । विहायोभयविहारं च, जातोऽहं शिथिलस्तथा ॥ ४५९ ॥ गौरवत्रितयेनापि, ततो मे हतचेतसः ।
"आर्तोत्थयोऽपि सपत्नो, दुष्टसङ्गस्य कारकः ॥ ४६० ॥ स च रौद्राभिसन्धिर्मे, न जातो बाधकस्तदा । आर्तोत्थयसमीपस्थः, केवलं सोऽ-
"प्यवस्थितः ॥ ४६१ ॥ ततस्ता अपि संपन्नाः क्लिष्टलेश्यापरिचारिकाः । तस्यैव धर्मनोयुक्ता, मम दौःशील्यकारिकाः ॥ ४६२ ॥ इत्थं
"चित्तविक्षेपो, मण्डपो वेदिका च सा । चित्तवृत्तौ कृता सज्जा, विष्टरं च समारितम् ॥ ४६३ ॥ चारित्रधर्मराजायाश्चिरपृथ्वौ विरो
'द्विताः । जातः श्रमणवेषोऽपि, मिथ्यादृष्टिरहं तदा ॥ ४६४ ॥ ततो लब्धावकाशैस्तैरेव सर्वैररातिभिः । आयुर्नाम्ना च संविष्टः, स राजा
"मम भार्यया ॥ ४६५ ॥ यदुत—निरूपयाऽस्यपुत्रस्य, भद्र! स्थानं मनोहरम् । साम्प्रतं चारुवासार्थं, योग्यमीदृक्षकर्मणाम् ॥ ४६६ ॥
"तेनोक्तं—भगवति! निरूपितमेवास्य निवासस्थानं, यतो मिलितः साम्प्रतं महामोहबलेऽमुष्य चरितेन विरचितहृदयः कर्मपरिणामः
"पुरस्कृतस्तेन पापोदयः प्रस्थापितोऽहमेकाक्षनिवासनगरे आकारितौ च ततस्तीव्रमोहोदयात्यन्ताबोधौ महत्तमबलाधिकृतौ तदत्र केनचि-
"त्कारणेन वेदनीयस्योपरि कर्मपरिणामः ततः सर्वस्वमपहृत्य कृतोऽसावकिंचित्करः ततस्ताभ्यां तीव्रमोहोदयात्यन्ताबोधाभ्यां सहानेन स
"परिवारेण मया भगवत्या च तस्मिन्नेवैकाक्षनिवासनगरेऽधुना निवस्तव्य," किमत्र निरूपणीयं?, जानाति चेदं सर्वं स्वयमेव भगवती,
केवलं मयि दयां कुर्वती मामेवमुल्लापयसि, भवितव्यतयोक्तं—भद्राभुक्त! सत्यमेवमिदं, यथाहि—नियोगो यत्र ते आसन्नागमसंस्थया

"पात्रापयत्वया । अहं पूज्यो जने मां हि, वन्दन्ते देवदानवाः ॥ ४५५ ॥ ममापिमातयः सर्वा, विपन्ते भावभूतय । इत्युक्त्वैकपरो
"भूत्वा, मार्गयामि च भाविनी ॥४५६॥ युग्मम् । यथा—आस्वादितेषु लभ्येषु, रसेषु परमा रतिः । आविर्भूताऽखिलौत्स्यान्मे, मार्गनाऽ-
"नागतेषु च ॥ ४५७ ॥ सम्यासनाभिसपाये, वस्त्राहाराभिगोचरे । सुखे शारीरिके तोषः, प्राप्ते लौल्यं च भाविनि ॥ ४५८ ॥ जात मे
"त्रितयस्यापि, तदानीं वशवर्तिनः । निद्रायोगमविहारं च, जातोऽहं शिथिलस्तदा ॥ ४५९ ॥ गौरवत्रितयेनापि, ततो मे हृतचेतसः ।
"भावोपशमोऽपि सपक्षो, दुःखसङ्कल्पकारकः ॥ ४६० ॥ स च रौद्राभिसन्निर्मे, न जातो बाधकस्तदा । भावोपशमसमीपस्थः, केवल सोऽ-
"प्यवस्थितः ॥ ४६१ ॥ ततस्ता अपि संपन्नाखिलस्वल्पपरिचारिकाः । तस्यैव वर्धनोद्युक्ता, मम दौःशील्यकारिकाः ॥ ४६२ ॥ इतश्च
"चित्तविक्षेपो, मण्डपो वेदिका च सा । चित्तवृत्तौ कृता सख्या, विष्टरं च समाश्रितम् ॥ ४६३ ॥ चारित्रधर्मराजाद्यामिसवृत्तौ स्थिरो
"स्थिताः । जातः प्रमत्ततेपोऽपि, मिथ्यादृष्टिरहं तदा ॥ ४६४ ॥ ततो छद्मावकाशैरेवं सर्वैररातिभिः । आयुर्नामा च सविष्टः, स राजा
"मम भार्यया ॥ ४६५ ॥ प्रयुत—निरूपयाऽर्यपुत्रस्य, भद्र! स्थान मनोहरम् । साम्प्रत चारुमासार्थं, योग्यमीदृशकर्मणाम् ॥ ४६६ ॥
"तेनोक्त—भगवति! निरूपितमेवास्य निवासस्थानं, यतो मिलितः साम्प्रत महामोहबलेऽमुष्य परितेन विरचितहृदयः कर्मपरिणामः
"पुरस्कृतस्तेन पापोदयः प्रस्थापितोऽप्रमेकाक्षनिवासनगरे आकारितौ च तत्स्त्रीमममोहोदयात्यन्ताबोधौ महत्तमबलाधिकृतौ दृष्टश्च केनचि
"त्कारणेन वेदनीयस्योपरि कर्मपरिणामः ततः सर्वस्वमपहृत्य कृतोऽसावकिंचित्करः ततस्ताभ्यां तीव्रमोहोदयात्यन्ताबोधाभ्यां सहानेन स
"परिवारेण मया भगवत्या च तस्मिन्नेकैकाक्षनिवासनगरेऽधुना मितव्य," किमत्र निरूपणीयं?, जानाति चेद् सर्वं स्वयमेव भगवती,
केवलं मयि दयां कुर्वती मामेवमुक्तवती, भवितव्यतयोक्तं—भद्रामुक! सत्यमेवमिद, तथाहि—नियोगो यत्र ते जातस्तत्रावश्यतया

"त्रीणि मानुषाणि क्लु प्रत्येकमाचार्योत्तमपौत्रामिसन्धिनामानौ द्वौ पुरुषौ यथोक्त परिचारिका यासन्ति एत एव कुम्भनीलकपोताधि
"पाना छेत्या इति गोत्रेण प्रसिद्धाश्चिन्तो नार्यः अथ तु याचत्प्रमत्तानदी पुनः ससाप्य प्रकाद्यामो मण्डपारीनि च भूयः समारयामः,
"एव च कुर्वतो भविष्यत्कालेशेनैवास्माकं प्रभाव इति," ततः प्रतिमात कन्यभिषो अपन सर्वेषामपि महामोहाद्विमुखुमां, ततस्तत्समर्पित
"चान्येन प्रारब्धं क्रियया—ततो मे निकटस्थेषु, तेषु मावेषु सुन्दरि' । पूर्वोक्तिवेषु सर्वेषु, यज्जात तमिस्तामय ॥ ४४१ ॥ तामातोकयतो
"गुर्वी, ममस्सन्मानपूजनाम् । मात्मनश्चित्तकल्लोला , समुत्पमा ममेदृशाः ॥४४२॥ यदुत—"अहो ममातुलं तेजस्तथाऽहो मम गौरवम् ।
"अहो भगति पाण्डित्यमन्यासाधारणं मम ॥ ४४३ ॥ अहो पुण्यप्रधानोऽहं, यथाऽत्रिमन्यभाषिनोः । कालयोरपि मादृशो, न भूतो न
"भविष्यति ॥ ४४४ ॥ सर्वा विद्याः कलाः सर्वाः, सर्वे चातिशयाः परम् । अहो विमुच्य भुवनं, मय्येव ननु संस्थिताः ॥ ४४५ ॥
"नरेन्द्रः पूर्वपर्याये, सुरूपो भोगलालितः । अधुना त्वीदृशः सूरिरहो माद्दृक् पुमान् ॥ ४४६ ॥ महत्कुलं महत्तेजो, महती भीम
"रूपता । महती च मम प्रज्ञा, सर्वं हि महतां महत् ॥ ४४७ ॥ पञ्चविधविकल्पैश्च, साहङ्कारस्य मे तदा । सम तेनानुभावेन, चेत-
"सो विजृम्भितः ॥ ४४८ ॥ तथा—यत्रासौ तत्र निवसाम्यिष्यापर्णनतत्परता । ज्ञानस्वरूपस्यापि, विलासो विपते भुवः ॥ ४४९ ॥
"ताम्यो वशीकृतमहं, मलिनीभूतचेतनः । ज्ञानमपि न जानामि, ज्ञानगर्भार्पणमत्तता ॥ ४५० ॥ पठामि पाठयाम्यन्य, व्याचक्षे ज्ञा-
"नसहस्रिम् । भावार्थं न च बुध्येऽहं, पक्वीभूतमानसः ॥ ४५१ ॥ केवलं मे परिभ्रष्टं, सार्धं पूर्वचतुष्टयम् । पाञ्चालं हन्त तत्काले,
"भेषजानं च विस्मृतम् ॥ ४५२ ॥ भवान्तरे प्रयत्नेन, चित्तदृष्टे समानघे ! । प्रसाद्धिता मयी सूर्ये, रिपुभिः सा प्रमत्तता ॥ ४५३ ॥
"ततो विजृम्भितान्युच्चैर्निबवीर्येण सुन्दरि ! । तानि गौरवसंज्ञानि, मानुषाणि विशेषतः ॥ ४५४ ॥ कथं ?—ईदृशः शिष्यवर्गो मे, यस

"पात्रावस्थया । अहं पूज्यो जने मां हि, वन्दन्ते देवदानवाः ॥ ४५५ ॥ ममाभिमावयः सर्वो, विघन्ते भावभूतयः । इत्युत्सेकपरो
"भूत्वा, प्रार्थयामि च भाविनीः ॥४५६॥ युग्मम् । तथा—आस्वादितेषु सम्येषु, रसेषु परमा रतिः । आविर्भूताऽतिलौल्यात्मे, प्रार्थनाऽ-
"नागतेषु च ॥ ४५७ ॥ शय्यासनादिसंपाद्ये, वस्त्राहारादिगोचरे । सुखे शारीरिके लोभः, प्राप्ते लौल्यं च भाविनि ॥ ४५८ ॥ जात मे
"त्रितयस्यापि, सदानीं वशवर्तिनः । विहायोपमविहारं च, जातोऽहं शिथिलस्तदा ॥ ४५९ ॥ गौरवत्रितयेनापि, यतो मे हतचेतसः ।
"जातोभयोऽपि सपत्नो, दुष्टसङ्गस्यकारक ॥ ४६० ॥ स च रौद्राभिसन्निभे, न जातो बाधकस्तदा । आर्तोभयसमीपस्थः, केवलं सोऽ-
"प्यवस्थितः ॥ ४६१ ॥ तस्या अपि सपत्नास्तिस्रस्तत्परिचारिकाः । तस्यैव सर्वनोपुक्ता, मम दौःशील्यकारिकाः ॥ ४६२ ॥ इतश्च
"चित्तविक्षेपो, मण्डपो वेदिका च सा । चित्तवृत्तौ कृता सम्या, विष्टरं च समारितम् ॥ ४६३ ॥ चारित्रधर्मराजापाभिघृतौ स्थितो
"स्थिताः । जातः श्रमणवेषोऽपि, मिथ्यादृष्टिरहं तदा ॥ ४६४ ॥ ततो सम्यावकाशैस्तैरेव सर्वैरपतिभिः । आयुर्नामा च सद्दिष्टः, स राजा
"मम भार्यया ॥ ४६५ ॥ युतं—निरूपयाऽऽर्यपुत्रस्य, भद्र[1] स्थानं मनोहरम् । साम्प्रतं पालनासार्थं, योग्यमीदृशकर्मणाम् ॥ ४६६ ॥
"तेनोक्त—भगवति[1] निरूपितमेवास्य निवासस्थानं, यतो मिलितः साम्प्रतं महामोहदलेऽमुष्य चरितेन विरचितहृदयः कर्मपरिणामः
"पुरस्कृतस्तेन पापोदयः अस्यापितोऽहमेकाक्षनिवासनगरे आकारितौ च तदस्तीव्रमोहोदयात्यन्ताबोधौ महत्तमबलाधिकृतौ दृष्टश्च केनचि-
"त्कारणेन वेदनीयस्योपरि कर्मपरिणामः ततः सर्वसमपहृत्य कृतोऽसावकिंचित्करः तदस्ताभ्यां तीव्रमोहोदयात्यन्ताबोधाभ्यां सहानेन स
"परिवारेण मया भगवत्या च तस्मिन्नेवैकाक्षनिवासनगरेऽधुना निवस्तव्य," किमत्र निरूपणीयं ?, जानाति चेद् सर्वं स्वयमेव भगवती,
केवलं मयि दयां कुर्वती मामेवमुत्पादयति, भवितव्यतयोक्त—भद्रामुष्क[1] सत्यमेवमिद, यताहि—नियोगो यत्र ते जातस्तत्रावश्यतया

मया । काले सहार्यपुत्रेण, यशाम्य क्षेपकैरपि ॥ ४६७ ॥ केवलं—त्रिभागमात्रमथापि, आवश्यकेह तिष्ठति । ततोऽतिवाहिते तत्र, सम्भावितो भद्र ! कीदृशा ॥ ४६८ ॥ तेनोक्तं भगवत्येव, भावीते केऽत्र मादृशाः ? । किं च—सम्पूर्णा कायतां सिद्धः, सामग्री गमनोचि ताम् ॥४६९॥ ततस्तैः प्रवलीसूत्रैः, संवेष्य वरानने ! । चलन्त्वशिथिलो मार्गे, कृतोऽहं सुखसम्पदः ॥४७०॥ गोप्य मे मा च दीर्घं मे, मा सम्त्वन्ये परीषहाः । पश्य सुखासिकादीक्षस्मकमार्गेस्तदाऽभवम् ॥ ४७१ ॥ ततस्तदन्ते रक्षितो विधानेन समूलया चेतनया प्रवर्धे दा रितोपैरपक्षमात्मान जीर्णायां प्राचीनगुटिकायामासाद्य तामपरां नीतोऽहं तत्रैकाक्षनिवासनगरे स्थापितो वनस्पतिपाटके तेन पूर्वो दितेन प्रासादापवरकन्यायेन, स्थितः कियन्तमपि कालं भक्षयमपरापरगुटिकां, ततोऽन्यदा नीतोऽहं क्षेपपाटकेषु तदन्यनगरेषु च, क्वापि मानीतः पञ्चाक्षपशुसंस्थाने—ततो मिथ्यात्वमावत्सामीतोऽहं विबुधालये । कृताश्च बहवस्तस्मान्मूपयत्र गमागमाः ॥ ४७२ ॥ तथाहि —पञ्चाक्षपशुसमानाद्भूरिशो व्यन्तरादिषु । अकामनिर्जरां प्राप्य, गतोऽहं शुभभावतः ॥ ४७३ ॥ तथा—विशिष्टपरिणामेन, कचि ज्ज्योतिष्कपादिषु । सौधर्मादिषु संपन्नो, विबुधाकारधारकः ॥ ४७४ ॥ किं बहुना ?—गृहिधर्मसमेतेन, सम्यग्दर्शनसंयुजा । उत्कृष्टस्तत्र स्थानादष्टौ कल्पा मयेक्षिताः ॥४७५॥ तथा—बहुशो मानवावासमवाप्तोऽहं सुलोचने ! । कर्माकर्मान्तरद्वीपभूमिजेषु नृषु स्थित ॥४७६॥ तत्र—अकर्मभूमिजातोऽनेक द्वे त्रीणि वा सुरा । स्थितः पल्योपमान्युच्चैः, कल्पपादपलालितः ॥ ४७७ ॥ तावन्त्यून्यमानश्च, सत्का न्तभोगमोहितः । सुखाहारविहारश्च, विशुद्धाशयबन्धुरः ॥४७८॥ तदन्ते मार्यया युक्तो, गतोऽहं विबुधालये । आसाद्य गुटिकां चार्वी, पूर्वोक्तविधिना तथा ॥ ४७९ ॥ भूरिवाराः प्रजातोऽहमन्तरद्वीपवासिषु । असङ्ख्यवर्षायुष्को (ष्केषु), गतश्च विबुधालये ॥ ४८० ॥ तथा —कर्मभूमिषु जातेन, पद्मानान्मया कृतम् । बालमरणसैन्यरिपवन विषभक्षणम् ॥ ४८१ ॥ पञ्चाग्नितपनाय वा, रज्ज्वापुद्भ पनादि

वा । कर्मप्रयुक्तेन भावेन, धर्मबुद्ध्याऽन्यथापि वा ॥ ४८२ ॥ मात्र तथापि वत्से !, सम्पूर्णं विबुधाख्यम् । किं तु किल्बिषिकावासे, जातो
व्यन्तरपाटके ॥ ४८३ ॥ त्रिभिर्विशेषकम् ॥ तथा—कृत्वा बालतपो घोरं, सरोषो वैरतत्परः । तपोगौरवयुक्तोऽहं, गतो भवनवासिषु
॥ ४८४ ॥ तथा—श्रावकत्वमथासाद्य, तदनुष्ठानमाचरन् । ज्योतिश्चारिषु नीतोऽहं, चतुष्को निजभार्यया ॥ ४८५ ॥ तथा—प्राप्य भा-
गवतीं दीक्षां, तपोनिष्टप्तदेहकः । युक्तः क्रियाकलापेन, ध्यानाभ्यासपरायणः ॥४८६॥ केवलं—सर्वज्ञभाषितं किंचित्पदं चाश्रद्दधदक्षरम् ।
अभद्रभावो भूतस्मात्सम्यग्दर्शनवर्जितः ॥ ४८७ ॥ गतोऽहं भूरिशो भद्रे !, सर्वग्रैवेयकेष्वपि । आगतो मानवावासं, भूयो भूयोऽन्तराऽन्तरा
॥ ४८८ ॥ युग्मम् । तत्र च भ्रमतश्चैव, भद्रे ! जानीहि कारणम् । यस्मिन्नाचार्यताकाले, शैथिल्यं मन्मया कृतम् ॥ ४८९ ॥ इतरथा
—सदैव निर्मलीकृत्य, चित्तवृत्तिं निजां च । त्रिपुवर्गं स्थितो राज्ये, गतः स्यां निर्वृतावहम् ॥ ४९० ॥ तदेवमविवेकात, भूयो भ्रम
पक्षपमम् । निजाया दुष्टचेष्टायाः, फलं नान्यस्य कस्यचित् ॥ ४९१ ॥ अगृहीतसङ्केतयोक्तम्—न केवलमिदं तात !, समस्तं सन्निवेशि
तम् । त्वयेह यत्त तत्सर्वं, निजचेष्टाविजृम्भितम् ॥ ४९२ ॥ तथाहि—यत्त्वं वर्षिष्यथाख्यात !, सर्वदा त्वं निरापणि । तस्य सुस्थितराजस्य,
सदाज्ञायां स्थिरासकः ॥ ४९३ ॥ नाभविष्यत्ततो दीर्घा, सर्वेयमतिदारुणा । भीषणा भूयमायाऽपि, तीव्राऽनर्थपरंपरा ॥ ४९४ ॥ युग्मम् ।
संसारिजीवेनोक्तम्—बाढं चारुमिदं सुभ्रु !, सम्यक् त्वं हि वर्तसे । नाम्नाऽगृहीतसङ्केता, भावतस्तु विचक्षणा ॥ ४९५ ॥ तदाकर्णय
चार्वङ्गि !, साम्प्रतं येन हेतुना । जातोऽस्मीदृशावस्थस्तस्कररूपकारकः ॥ ४९६ ॥ अगृहीतसङ्केतयोक्तम्—निवेदयतु भद्रः, संसारिजी
वेनोक्तम्—तस्माद्ग्रैवेयकादन्त्यात्तानीतोऽहं भवेच्छया । पुरीं मनुजगत्यन्तःपातिनीं क्षेमनामिकाम् ॥ ४९७ ॥ इतश्च जानात्येव भवती यथा
अनेकापण्यमाकाम्ये, भूरिविस्तारसुन्दरे । महाविदेहरूपेऽत्र, हट्टमार्गेऽतिविस्तृते ॥ ४९८ ॥ वसन्ति चित्ररूपाणि, वस्तुराण्यप्सराऽन्तरा ।

मया । स्थाने सार्थपुत्रेण, वर्त्म क्षेपकैरपि ॥ ४६७ ॥ केवल—त्रिभागमात्रमपापि, स्थातव्यमेव तिष्ठति । ततोऽवतिष्ठिते तत्र, तस्माभो भद्र! जीवस्व ॥ ४६८ ॥ तेनोक्तं भगवन्नेव, ज्ञातीते केऽत्र मादृशाः ? । किं च—सम्पूर्णा कार्यता सिद्धा, सामग्री गमनोचि ताम् ॥४६९॥ ततस्तैः प्रबलीभूतैः, सैवेयं वरानने! । भवन्त्यविषिद्धो मार्गो, कृतोऽहं सुपकम्पटा ॥४७०॥ मोष्य मे मा च क्षीव मे, मा सन्त्वन्ये परीषहाः । एष मुक्तासिकाक्षीमक्षयमार्गस्वराऽभवम् ॥ ४७१ ॥ ततस्तन्ते रक्षितो विधानेन समृद्धया पवनया प्रबद्धे शा- रीरयोपेरक्षतमात्मान जीर्णाया प्राचीनगुटिकायामास्वाद्य तामपरां नीतोऽहं तत्रैकाक्षनिवासनगरे स्थापितो वनस्पतिपाटके तेन पूर्वो दितेन प्रासादापवरकन्यायेन, स्थितः कियन्तमपि कालं ममापरापरगुटिकां, ततोऽन्यदा नीतोऽहं शेषपाटकेषु तदन्यनगरेषु च, ज्ञापितानीतः पञ्चाक्षपशुसंस्थाने—ततो विलुब्धमावसानीतोऽहं विबुधालये । कृताश्च पदवत्समानुपखाच गमागमाः ॥ ४७२ ॥ तथापि —पञ्चाक्षपशुसंस्थानान्नरिको म्लेच्छयतिषु । अकामनिर्जरां प्राप्य, गतोऽहं सुभमानवः ॥ ४७३ ॥ तथा—विशिष्टपरिणामेन, कचि त्कस्योपपातिषु । सौधर्मादिषु सम्भूतो, विबुधाकारधारकः ॥ ४७४ ॥ किं बहुना ?—एभिधर्मैकमेकेन, सम्यग्दर्शनसंयुता । तत्कारकस्तव स्थानसङ्घे कस्या ममेक्षिताः ॥४७५॥ तथा—बहुशो मानवावासमवाप्तोऽहं सुलोचने! । कर्माकर्मान्तरद्वीपभूमिकेषु नृषु स्थितः ॥४७६॥ तत्र—अकर्मभूमिजातोऽहमेके द्वे त्रीणि वा मुधा । स्थितः पल्योपमान्युच्चैः, कल्पपादपलालित ॥ ४७७ ॥ तावद्रम्भ्युतमानश्च, सत्का म्यामोगमोदितः । सुखाहारविहारश्च, विबुधाश्रयम पुनः ॥४७८॥ तदन्ते भार्यया युक्तो, गतोऽहं विबुधालये । भास्वाद गुटिकां पार्श्वी, पूर्वोक्तविधिना तथा ॥ ४७९ ॥ भूरिवाराः मनाप्तोऽहमन्तरद्वीपवासिषु । असंख्यवर्षायुष्को (ष्केषु), गतश्च विबुधालये ॥ ४८० ॥ तथा —कर्मभूमिषु जातेन, पद्मानान्मया कृतम् । अज्ञानकृतसंयमविपयतन विपमक्षणम् ॥ ४८१ ॥ पश्चाभिलपनाय वा, रज्जुबन्धनाश्रि

अथासौ भास्कराकारस्ततोऽत्र समुपागतः । नलिनी च गता तेन, सार्धं माता ममाम्बा ॥ ५१८ ॥ ततो यावत्करिष्यन्ति, किल राज्येऽभिषेचनम् । सामन्तास्तावदुत्पन्नं, चक्ररत्नं ममायुधम् ॥ ५१९ ॥ तथा—जातानि शेखरत्नानि, सुन्दराणि त्रयोदश । निधयश्च समायाता, नव यक्षैः सुरक्षिताः ॥ ५२० ॥ ततोऽयं चक्रवर्तीति, मत्वा सर्वे नराधिपाः । गताः किङ्करतां मेऽत्र, सुकच्छविजये तदा ॥ ५२१ ॥ ततो निर्जित्य निःशेषं, षट्खण्डं भूमिमण्डलम् । क्षेमपुर्यां स्थितेनैव, प्रतापेन ममार्जितम् ॥ ५२२ ॥ ततो द्वादश च वर्षाणि, द्वात्रिंशद्भिर्महीभुजाम् । सहस्रैरभिषेको मे, किरीटाटोपराजिनाम् ॥ ५२३ ॥ ततो देवीसहस्राणां, चतुःषष्ट्या सदाश्रिताम् । कुवलीकाञ्जनेत्राणां, भुञ्जानो भोगसंहतिम् ॥ ५२४ ॥ कुर्वाणो जनतानन्दं, प्रधानप्रकर्षवर्तिताम् । महाभूतिविमर्देन, भूरिकालमहं स्थितः ॥ ५२५ ॥ युग्मम् । किं बहुना?—चतुर्भिरधिकाशीतिपूर्वलक्षाणि लीलया । महाराज्यसम्भोगं, कृत्वाऽहं चारुलोचने[1] ॥ ५२६ ॥ निर्गतः पश्चिमे काले, स्वपुर्यां राजलीलया । षट्खण्डविजयस्यापि, तस्य दर्शनकाम्यया ॥५२७॥ पुराकरादिसंकीर्णां, तां पर्यन्य वसुन्धराम् । अहमत्र समायातः, तत्पुरे शङ्खनामके ॥ ५२८ ॥ ततश्च—पश्चात्कृत्वा बलं शेषं, राजकसमवेष्टितः । प्राप्तश्चित्तरमं चेदमुद्याननन्दनोपमम् ॥ ५२९ ॥ इतश्च—यानि गुणधारणावस्थायाममूर्बन्धयथा प्रथमो मे धर्मदेशकः कन्दमुनिः तथा वयस्यः कुलंधरो भार्या च मदनमञ्जरी, तान्यप्यासेटितानि भवितव्यतया भ्रमितानि भवचक्रे दर्शितानि सुन्दरासुन्दररूपेण, ततः स कन्दमुनिः कथितकलत्रलिकासम्पर्कं समानीतोऽस्यैव सुकच्छविजयस्यान्तर्भूते हरिपुरे तत्र च भीमरथो राजा तस्य च सुभद्रा नाम महादेवी तयोश्चास्ति समन्तभद्रो नाम तनयः ततः प्रवेशितोऽसौ कन्दः सुभद्राकुक्षौ निर्गतः क्रमेण जाता दारिका मलिविलिखं तस्या नाम महाभद्रेति । इतश्च समन्तभद्रः संप्राप्य सुघोषमाचार्यं सञ्जातवैराग्यः संभाष्य पितरौ निष्क्रान्तः तपसः संपूर्णद्वादशाङ्गधरः स्थापितो गुरुभिः सूरि

ततः क्षेमपुरी साऽस्ति, सन्मार्गस्य सम्पदा ॥ ४९९ ॥ सुकच्छविजयस्थानमिदं भद्र! निगद्यते । यत्र स्थिता त्वं भूप, पुरी सा च
मनोहरा ॥ ५०० ॥ तस्यां च क्षेमपुर्याम्—अभूद्रासितारिसर्वस्वस्तेजसां निधिः । राजा युगंधरो नाम, भास्कराकारधारकः ॥५०१॥
तस्य दर्शनमात्रेण, प्रोत्फुल्लमुखपङ्कजा । आसीदिष्टा महादेवी, नलिनी नाम विश्रुता ॥ ५०२ ॥ अथाऽगृहीतसङ्केते!, भवितव्यतया
तया । तस्याः प्रवेशितः कुक्षावहं पुण्योदयान्वितः ॥ ५०३ ॥ दृष्टश्च—तस्यां रात्रौ सुखाय्यायां, सा सुप्ता कमलेक्षणा । चतुर्दन्तं महा
प्रमाणवशोभं समुत्थिता ॥ ५०४ ॥ ततः प्रहृष्टयाऽऽख्यातस्ते युगंधरभूभुजे । तथा फलोपलम्भाय, महास्वप्ना गजादय ॥ ५०५ ॥
तेनाप्युक्तं यथा देवि!, देवदानवपूजितः । कुलप्रदीपस्ते पुत्रश्चक्रवर्ती भविष्यति ॥ ५०६ ॥ ततः प्रोत्फुल्लनेत्रा सा, मधुरास्यमनोहरैः ।
अभिनन्द्य तदालापैर्गर्भं धारयतेऽनघा ॥५०७॥ ततः सम्पूर्णकालेन, सुन्दराकारधारकः । पुण्योदययुतो जातस्तोपाहूतोऽहमम्बया ॥५०८॥
अथ गत्वा प्रियङ्कर्या, हर्षगद्गदया गिरा । प्रोत्फुल्लनेत्रयाऽऽस्थाने, तातायाहं निवेदितः ॥ ५०९ ॥ ततः पुलकपाशाङ्गः, स दत्त्वा पारि
तोषिकम् । दानं तस्यै यथाकाममादिदेश महोत्सवम् ॥ ५१० ॥ अथ विलासविभूषणबन्धुरः, सरसनर्तनवादनसुन्दरः । मदविघूर्णित
लोकमनोहरः, प्रवृत्ते मम जन्ममहोत्सवः ॥ ५११ ॥ गानपानभरदानसमन्वितो, मानदानमदनादरमन्थः । तातवाक्यवशतो विलसन्त
स्तत्र गात्रमुदिता ननु सन्तः ॥ ५१२ ॥ षष्ठेऽथ दिने भद्रे!, तथाऽन्यदिनपञ्चकम् । गतमुद्दामलीलाभिर्हृष्टतुष्टजनसुन्दरम् ॥ ५१३ ॥
ततः प्रयत्नतः सर्वैस्तातमातामहादिभिः । पञ्चिकाजागरो रम्यः, कृतो मे नाकविभ्रमः ॥ ५१४ ॥ ततो महाप्रमोदेन, द्वादशे मास
मासके । प्रतिष्ठितं च मे नाम, यथाऽयमनुसुन्दरः ॥ ५१५ ॥ अथ संवर्धमानोऽहं, धात्रीपञ्चकलालितः । कुमारभावमापन्नो, गृ
हीताः सकलाः कलाः ॥ ५१६ ॥ ततश्च यौवनस्थोऽहं, यौवराज्येऽभिषेचितः । तातेन महता भद्रे!, विमर्देन मनोरमे ॥ ५१७ ॥

तदर्थं दत्तान्युपयाचितशतानि पितृलोपमभूतानि, ततो भवितव्यतया स कुलंधरो सूरिषु भवेषु कृतकुशलाभ्यासः प्रवेशितस्तस्याः कुक्षौ, दृष्टोऽनया स्वप्नो यथा सुन्दराकारधरः पुरुषो वदनेन मे प्रविश्य शरीरे हृदयेन निर्गत्य गतः केनचिन्नरेण सार्धं, ततः कथितोऽनया भर्त्रे स स्वप्नः, तेनोक्तं—भविष्यति ते पुत्रः केवलमचिरेण कञ्चन गुरुं प्राप्य प्रव्रजिष्यति, तदाकर्ण्य हृष्टा कमलिनी, ततस्तृतीये मासि सञ्जातोऽस्याः कुशलकर्मकरणमनोरथः सम्पादितः श्रीगर्भराजेन सम्पूर्णकाले च जातो दारकः परिपुष्टो राज्ञा कारितस्तज्जन्मानन्दः, इतश्च समुत्पन्नविमलकेवलालोकः समागतोऽसौ समन्तभद्राचार्यः स्थितोऽत्रैव चित्तरमे कानने निर्गता तद्वन्दनार्थं महाभद्रा कथञ्चिच्च विज्ञातः सुललितया, सञ्जातः कथंचिद्राजदारकजन्मः, भगवतोक्तं—एष बहुशोऽभ्यस्तकुशलकर्मा राजपुत्रो न स्थास्यति भवने ग्रहीष्यति प्रव्रज्यां भविष्यति सर्वागमधारकः, तदाकर्ण्यागता निजोपाश्रये महाभद्रा, इतश्च तस्य नरेन्द्रतनयस्य पौण्डरीक इति प्रतिष्ठितमभिधानं विहितो नामकरणप्रमोदः, इतश्च सा सुललिता कुतूहलपरतया विचरन्ती प्राप्ता तत्र चित्तरमे कानने दृष्टः सहमध्यस्थोऽनया स समन्तभद्रसूरिर्नृपतिसुतगुणसन्दोहं वर्णयमानः, उक्तं च भगवता—यतोऽस्य शुभेन कर्मपरिणामेन अनुकूलीभूतया कालपरिणत्या अस्यां मनुजगतौ जनितस्तस्मादेवंविधगुण एवायं भविष्यति, भव्यपुरुषो हि सुमतिः सभिचिह्नैर्गुणैर्युक्तस्य एव कोऽत्र सन्देहः ?, ततस्तदाकर्ण्य हृष्टाः सर्वे लोकाः, सुललितया चिन्तितं—कथं कालपरिणतिकर्मपरिणामयोर्जनकत्वं कथं चैव भाविगुणभावं जानाति ?, ततो गत्वा प्रवर्तिनी पृष्टाऽनया महाभद्रा, तया चिन्तितं—अत्यन्तमुग्धेयं सुललिता, ततोऽयमेवास्याः प्रतिबोधनोपाय इति संचिन्त्य युक्तितः समर्थितं महाभद्रया कालपरिणतिकर्मपरिणामयोर्जनकत्वं, तस्यागमात्तु सदागमगोचरतामस्याः प्रीतिरिति चिन्तयन्त्याऽभिहितमनया—भद्रे ! स यदा लोकमध्ये व्याचक्षाणः सदागमस्तदाऽवलोकितः स हि भगवान् भूतभवद्भविष्यद्भावातिशयोपतापविभासयतीति नास्त्यत्र सन्देहः

पदे, सापि च महाभद्रा समाता यौवनं परिणीता गन्धपुराधिपतिना पद्मावतीरविभ्रमपुत्रेण दिवाकरेण गतोऽसौ कालधर्मनामस्य प्रति बोधिता समन्तभद्रसूरिणा महाभद्रा गृहीताऽनया भागवती दीक्षा सञ्जातैकादशाङ्गधारिणी गीतार्था स्थापिता गुरुभिः प्रवर्तिनीपदे ततः सा सुसाध्वीभिः परिवारिता विहरन्ती समायाता रत्नपुरे, तत्र च मगधसेनो राजा तस्य च सुमङ्गला नाम महादेवी, इतश्च सा मद नमञ्जरी च्यविता तत्सुतात्वेन भवितव्यतया तथा कृत तस्याः सुलक्षितेति नाम जाता क्रमेण यौवनं संपन्ना पुरुषद्वेषिणी सञ्जातो भूरि कालः नेष्टो वरगन्धोऽप्यनया ततः कथमिव वरिष्यत इति सञ्जाता जननीजनकयोश्चिन्ता ततो महाभद्रां समागतामाकर्ण्य गृहीत्वा तां सुलक्षितां पितृपुत्रिकां गतौ तदुपाश्रये वन्दनार्थं देवीनरेन्द्रौ वन्दिता सपरिकरा भगवती दत्तोऽनया परमपदुरूपपादपनिरुपद्रवबीज भूतो धर्मलाभः विहितास्तत्प्रत्यासन्ना सद्धर्मदेशना ततः सा सुलक्षिता परिस्फुटमबुध्यमानापि भगवतीवचनभावार्थमसम्बुध्यतया पूर्वपरिचयाद्गुरुभक्तिरागा भगवतीवदनकमलावलोकनाभिलाषेण कथिदन्यत्र नेतुमपारयन्ती पितरं प्रसाद—तात! मया भगवत्या चरणयुगलं पर्युपासितव्यं तदनुज्ञानात् मां तातो येनाहमनयैव सार्धं सर्वत्र विचरामीति, तदाकर्ण्य प्रहसिता सुमङ्गला, नृपतिराह— देवि! अलमत्र वचनेन करोतु वत्सा समीहितं अयमेवास्या विनोदनोपायो भविष्यति, केवलं भगवतीपार्श्वस्थयाऽनया सामग्रीयुक्तया गृहस्थयैव सदा पर्यटितव्यं न चाभरणच्छयाऽनया प्रव्रज्यामत्तोऽपि विधेय, सुलक्षितयोक्तं—तात! महाप्रसादः, ततः सा सुलक्षि ता तथा महाभद्रया प्रवर्तिन्या सह तथैव नानादेशेषु विचरितुं प्रवृत्ता, केवलं कर्मोदयात् प्रवर्तते तस्याः पाठः न जाति सामाचारी क्रमः न बुध्यते च सा परिस्फुटमपि कथ्यमानमागमार्थं, अन्यदा समायाता भगवती महाभद्राऽत्र शङ्खपुरे स्थिता नन्दस्य श्रेष्ठिनो यच शालायां, इतश्चात्र शङ्खपुरे मम मातुलः श्रीगर्भो नाम राजा तस्य च महाभद्रामातृष्वसा कमलिनी नाम महादेवी सा च निरपत्या

श्रीगर्भराजाय च सञ्जातस्तयोः प्रमोदः ततो गत्वा महानन्देन समर्पितस्ताभ्यां भगवतो निजतनयः ततः कुरुते स प्रतिदिनमागमाधिगमं पौण्डरीकः, ततोऽन्यदा चित्तरमे कानने मनोनन्दने चैत्यभवने सहस्रसुधनसमभ्यस्थिते भगवति समन्तभद्रसूरौ धर्मं व्याचक्षाणे स्थितायां महाभद्रायां निकटवर्तिनि पौण्डरीके समागतायां सुललितायां धर्मकथाऽऽक्षिप्तहृदये भव्यलोके समुल्लसितो महीयानव्यक्तकलकलः, तच्छ्रवणात्सुकर्णिता परिषत्, ततः सुललितया महाभद्रा प्रश्नुक्ता—भगवति! किमेतत्?, सा प्राह—नाहं जाने, ततो भगवता तयोः सुललितापौण्डरीकयोः प्रतिबोधार्थमुक्तं—यथा महाभद्रे! किं न जानीषे त्वं प्रसिद्धैव तावदियं मनुजगतिर्नगरी प्रख्यातोऽयं महाविदेहरूपो हट्टमार्गो यत्राधुना सर्वेऽपि वयमास्महे, ततोऽत्र संसारिजीवो नाम तस्करो गृहीतः सलोप्त्रको दुर्गन्धयादिभिर्दण्डपाशिकैः दर्शितः कर्मपरिणाममहाराजाय, ततस्तेन दृष्ट्वा कालपरिणतिं समालोच्यादापितोऽसौ वध्यतया, ततः सोऽयं संसारिजीवः तस्करो मे छिद्यते राजपुरुषैर्महाकलकलेन हट्टमार्गमध्येन नगर्या निःसार्य नीत्वा च पापिपञ्जरनामके वध्यस्थाने दुःखमारेण मारयिष्यते, तदेष तस्मिन्नीयमाने कोलाहलः श्रूयते, सुललितयोक्तं—भगवति! ननु क्षत्रपुरमिदं न मनुजगतिः चित्तरमं चेदं काननं न हट्टमार्गः श्रीगर्भश्चात्र राजा न कर्मपरिणामः तत्किमित्येवं भगवन्तो जल्पन्ति?, भगवानाह—धर्मशीलेऽगृहीतसङ्केता त्वमसि न जानीषे परमार्थं, सुललितया चिन्तितं—ही ममाप्यपरं नाम कृतं भगवता, ततः स्थिता विस्मितवदना, महाभद्रया बुद्धो भगवद्वाक्यार्थः, चिन्तितमनया—कश्चिदेष क्लिष्टभूरिपापो नरकगामी भगवता जीवो निर्दिष्टः, ततः संजाता महाभद्रायाः करुणा, अभिहितमनया—भगवन्! किमेष कथंचिन्मोचयितुं पार्यते तस्करो न वेति, भगवानाह—आर्ये! तव दर्शनेनास्मत्समीपागमनेन च भविष्यत्यस्य मोक्षः, महाभद्रयोक्तं—भदन्त! गच्छाम्यहमस्याभिमुखं, भगवतोक्तं—गच्छ, ततः करुणापरिगतहृदयाऽऽगता महाभद्रा मदभ्यर्णे, अभिहितोऽहं—

तत्प्रसादादेव मयाऽपीह समस्तं विज्ञातं चिरपरिचितः स मे भगवान्महाप्रभावश्चेत्यादि वर्णितं सदागममाहात्म्यं कथितं च तस्य तथा परितोषकारणं, सुललितयाऽभिहितं—भगवति! ममापि विधेहि तेन भगवता सह परिचयं, महाभद्राऽऽह—बाढं, ततो गताऽनया समन्तभद्रसूरिसमीपे सुललिता, तद्दर्शनाच्च सुललितायाः प्रमोदः संपन्नः कथितगुणेषु समत्ययः, अभिहितमनया—भगवति! यदि वाऽस्मिन्नेव काले भगवता मयेप न दर्शितो मे महाभागः सदागमः अहो वै स्वार्थपरता तदतः परं भगवति! दर्शनीयो मे दिने दिने भगवान् येनाहमपि भगवता सदृशी पण्डिता भवामि, महाभद्रयोक्तं—एवं करिष्ये, ततः प्रारब्धा ताभ्यां प्रतिदिनं भगवदुपासना अतिक्रान्तो मासकल्पः, ततो भगवानाह—महाभद्रे! क्षीणजङ्घाबलाऽसि त्वमधुना न शक्नोषि विहर्तुं भवत्विह त्वमत्रैव शङ्खपुरे वयं तु विहृत्यस्तावत् पुनरागमिष्यामः, गुणकलशिगुरुनीरप्रमेवेदस्माकं मासकल्पकरणे कारणं, अन्यथा हि न कल्पते साध्वीसमभ्यासितम् अत्र साधूनां कर्तुं मासकल्पः, ज्ञानप्रतिजागरणं तु युष्माभिः कार्यं, प्रतिचरणीयश्च भवत्या पौण्डरीकोऽयं राजदारकः भविष्यत्येव वर्धमानो मे शिष्यः, तथेति प्रतिपन्नं सूरिवचनं महाभद्रया विहृता भगवन्तः, गताः क्रमेण पौण्डरीकः कुमारभावं प्रादुर्भूतोऽस्य यथानिर्दिष्टो गुणकलापः जातोऽयं स्नेहभक्तिविषयस्तयो महाभद्रायां, समागता भूयो भगवन्तः समन्तभद्रसूरयः नीतस्तदभ्यर्णे महाभद्रया पौण्डरीकः, स च भाविभद्रतया तन्मूर्तिदर्शनेन रचितसत्त्वगुणकलापेन प्रीतिविस्तारपानाकर्णनेन, सुवर्णपुष्पितया च महाभद्रां प्रसाद्—भगवति! किंनामायं महाभागः?, तया चिन्तितं—तरलमनोऽयं राजपुत्रो रक्षितश्च भगवद्गुणैरिति लक्ष्यते, तदस्यापि जनयाम्येतदाकार नैव सर्वागमविषयो भक्तिमिति संचिन्त्याभिहितमनया—भद्र! सदागमोऽयमभिधीयते, पौण्डरीकेणोक्तं—भगवति! यद्यप्याततयोः प्रतिभाति तत्तोऽहमनेन भगवतः सकाशे गृहाण्यागमार्थ, महाभद्रयोक्तं—युक्तमिदं, ततो निवेदितस्तदभिप्रायो महाभद्रया कमलिन्यै

पृष्टास्तत्रात्र जानासि भवान्? इत्येतत्सर्वं निवेदयितुमर्हसि भद्र, अनुसुन्दरेणोक्तं—अस्ति तावदागतोऽहमत्यमेयकालात् समुत्पन्नोऽत्र सुकच्छविजये क्षेमपुर्यां युगन्धरनलिनीपुत्रतयाऽनुसुन्दराभिधानः, अत्रान्तरे प्रोत्साहितास्ते भवितव्यतया महामोहादयः, कथं?—त न्मया दर्शनक्रूरस्तो, मामवेपोऽनुसुन्दरः । भवद्भिः तावदेवात्र, भूय भोः स्वार्थसिद्धये ॥ ५२० ॥ इतरथा—कथमिव समासाद्य, परिपोष्य निज बलम् । भवतां मार्गवेधार्थं, बाधाकारी भविष्यति ॥ ५२१ ॥ अन्यच्च—अक्लेशेन वशं याति, साम्प्रतं भवतामयम् । सद्बोधापेक्षितो भूयो, दुर्ग्रहोऽयं भविष्यति ॥ ५२२ ॥ ततोऽधुना यथाशक्त्या, कुरुध्वं पक्षवर्तिनम् । चित्तवृत्तिमहाराज्ये, तत यूयं निराकुलाः ॥ ५२३ ॥ ततस्तथेति तैर्भद्रे', वल्गमानैर्निरङ्कुशैः । बालकालात्समारभ्य, वेष्टय परिक्षिप्तिः ॥ ५२४ ॥ अहं तु तेषां मध्यस्थो, ध्यान्ध्यान्धीभूतचेतनः । विस्मृतक्षेपसद्बन्धुः, पुनरुन्मत्ततां गतः ॥ ५२५ ॥ ततः समस्तैस्तैः पापैः, संप्रयुज्य निजं निजम् । वीर्यं कृतोऽहं भूयोऽपि, पापार्जनपरायणः ॥ ५२६ ॥ कथं?—कौमारे वर्तमानोऽहं, प्रवृत्तो मांसभक्षणे । मद्यपाने रतो द्यूते, जन्तुसङ्घातपीडने ॥ ५२७ ॥ यौवने वर्तमानेन, पारदार्यादिपद्धतिः । लोके प्रभवताऽत्यर्थं, प्रसभं विहिता मया ॥ ५२८ ॥ तथा—स्थितेन चक्रवर्तित्वे, महारम्भपरिग्रहाः । पापर्द्धयोऽन्यदोषाश्च निरपेक्षेण सेविताः ॥ ५२९ ॥ सर्वत्र मूर्च्छितो गृद्धो, विमूढो विषयेषु च । एतावन्तमहं कालं, स्थितोऽत्यन्तसुखी किल ॥५४०॥ एवं च वर्तमानेन, मया ते भावशत्रवः । विस्मृत्य पूर्ववृत्तान्तं, बन्धुबुद्ध्याऽवधारिताः ॥५४१॥ ततस्तैर्लब्धप्रसरैर्मे मलिनतरीकृता चित्तवृत्तिः निर्दयमभिभूतं चारित्रधर्मराजबलं धारितं (दूरे) निरुद्धमभ्यन्तरे तिरोहितं तत्सान्त्वादिकं सुन्दरमन्तःपुरं जनितोऽविवेकोऽहं ममानुभावात् प्रकाशितं कर्मपरिणामराज्यं प्रबलीभूतः पापोदयः स्थितासमुदायतया महामोहसैन्यं संस्थापितानि निजनगरादीनि मद्भृत्या वोढुं महापूरेण प्रवृत्तवान्वी विस्तीर्णीभूता तत्क्षितौ प्रत्यनीकवर्गविशेषमण्डपः समारिता तृष्णा-

यथा भद्रे! भगवन्त्वं सदागम शरणं प्रतिपद्यस्वेति, ततः समानीतोऽहमनया भगवत्समीपं, दृष्टोऽहमथ तस्कराकारधारकः स महापरिषदा, ममापि भगवन्मुखकमलावलोकनतोऽमाप्येयसुखरसनिर्भरतया समागता मूर्च्छा तथा चेतना प्रविष्टः शरणतया भगवान् मा भैषीरिति वचनेन समाश्वासितोऽहं भगवता दूरीभूता भगवद्भयेन किङ्करा राजपुरुषाः ततो विगतभीभूतोऽहं पृष्टस्तया व्यतिकरं कथितश्च मया यथासद्वृत्तान्तो विस्तरेण, अथ च भद्रे! भगवतः समन्तभद्रसूरेर्महाभद्रायाः पौण्डरीकस्य भवत्याश्च सम्बन्धी वृत्तान्तः प्रतीतोऽपि तव सुसंविस्तरं मया निवेदितः येन ते मदीयकथिते सुनिर्णीतमनाय कथयतीति तत्र सम्प्रत्ययो भवति, तज्जातस्तेऽधुना सम्प्रत्ययः?, सा प्राह—बाढमस्मगोचरः सेमाया, केवलं भवि त्वमनुसुन्दरनामा चक्रवर्ती ततः किमिति तस्कराकारधारको दृश्यसे?, अथ मेऽधुना सन्देहः, स प्राह—भद्रे! युवयोः प्रतिबोधनार्थं मयेदं बहिरपि तस्कररूपं विरचितं यतोऽहमन्तरङ्गं चौर्यमुद्दिश्य भवतोः पुरतो भगवता सधारिपीको नामायं तस्करः कर्मठेनेत्थं चक्षु नीपठे मम इत्याख्यातः, ततो गतायां मम सम्मुखं महाभद्रायां तद्दर्शनानुभावात्संजाते प्रबोधे मया चिन्तितं—यद्यप्येषा महाविशाला महाभद्रा मामात्मीयं भगवत्यासीद् मदीयमन्तरङ्गं चौर्यं ततो लक्षयति भावतो मम त स्करतां तथाप्यगृहीतसङ्केताऽद्यापि सा सुललिता न जानीते गन्धमप्यस्य व्यतिकरस्य, तच्चक्रवर्तिरूपधारिणं मामुपलभ्य भवेदस्याः सदागमवचने विस्मयो न जानीते किंचिदयं सदागमो यदयं चक्रवर्त्यप्यनेन तस्करोऽभिहित इति भावनया, किं च—असावपि पौण्डरी कोऽनेनैव द्वारेण प्रतिबोधितो भविष्यति, अल्पपुरुषो ह्यसौ सुमतिश्च वर्तते जिज्ञासति भावकीनवृत्तान्तभवगोचरकालमयं सर्वस्य परि स्फुटमेवंरूपं भविष्यतस्य प्रबोध इत्येवं विचिन्त्य विरचितमिदमन्तरङ्गासरूपसूचकं वैक्रियकरणलब्ध्या मया बहिरपि सर्वमेतदपि रूप मिति, सुललितयोक्तं—कीदृशं पुनस्तदन्तरङ्गं चौर्यं यद्भवता विहितं कथं वा तदेतादृशी विडम्बना कृता माऽभगवं परागत च निःशेष

पात् । आलोक्य काननं दिव्यं, सस्मितस्फारितदृशया ॥ ५४६ ॥ राजपुत्राश्च मे यावन्निनीवाच्चादुकारिणः । वदन्तो देव देवेति, दर्शयन्ति
वनाभियम् ॥ ५४७ ॥ तावदेषा महाभागा, सुसाध्वीपरिवारिता । आगच्छन्ती महाभद्रे !, महाभद्रा विलोकिता ॥ ५४८ ॥ चतुर्भिः
कलापकम् । अथ निःशेषरूपेभ्यो व्यावृत्ता कीलितेव मे । अस्यां निपतिता दृष्टिः, समाधाऽत्यन्तनिश्चला ॥ ५४९ ॥ एषापि मां प्रप
श्यन्ती, सपत्ना स्नेहपरवशा । निःस्पृहापि महाभागा, पूर्वाभ्यासेन सुन्दरि ! ॥ ५५० ॥ अथ प्राप्ता ममाभ्यर्णे, चिन्तयन्ती गुरोर्वचः ।
अथ नरकगामीति, करुणाऽऽगतचेतना ॥ ५५१ ॥ ततः कन्दमुनिकाले गुणधारणेन सता मया चिरमेवष्ठोत्तरसाम्यस्थतया बहुमान
स्यानुशीलिततया विनयस्य प्रतिपन्नतया हृदयस्य भावितया गौरवस्यानुष्ठिततया वत्सलभावस्य प्रादुर्भूतमेवासि मे विमर्शः यदुत—
कैषा पुनर्भगवती या दृष्टमात्रापि मे हृदयमेवमाह्लादयति नयने शीतलयति शरीरं निर्वापयति अमृतकुण्ड इव मां सिञ्चतीति, ततः कृतो
मया भगवत्याः शिरःप्रणामः दत्तोऽनया धर्मलाभाशीर्वादः, अभिहितं च—भो भो महाराज—मोक्षसम्प्रापके प्राप्ते, मानुष्ये ते नरो
त्तम ! । उन्मार्गगमनाभैर्व, गन्तुमत्यन्त युज्यते ॥ ५५२ ॥ निजकर्मोपराधेन, सत्कार्यकारधारिणः । चम्यस्य नीयमानस्य, कृत्वा भावयि
तव्यनाम् ॥ ५५३ ॥ किं राज्यं सुविज्ञाताः के, के भोगाः का विभूतयः । किं वा स्वास्थ्यं ? महाराज !, चिन्त्यतेदं स्वचेतसा ॥ ५५४ ॥
युगमम् । किं च—मद्दर्शनाच्चतत्र समुत्पन्नविमर्शायाः सञ्जातमस्या भगवत्या महाभद्राया जातिस्मरणं स्मृतस्तेन कन्दमुनिकालादारभ्य
समस्तो वृत्तान्तः प्रादुर्भूतं तदनुसारेण शुभाध्यवसायादवधिज्ञानं दृष्टं तेन मदीयमपि विचरणं, ततोऽभिहितमनया—किं न स्मरसि रा
जेन्द्र !, यत्तदा गुणधारण । भवतुरामलीलाभिर्लालितस्त्वं ममामतः ॥ ५५५ ॥ क्षान्त्याधन्तःपुरं प्राप्य, सुखसम्भारपूरितः । स्थितो
यन्मयारम्भे त्वं, तत्किं ते विस्मृतं किल ? ॥ ५५६ ॥ किं न निर्मलसूरीणां, वचनानि स्मरन्ति ते । भवप्रपञ्चो यैस्तुभ्यमनन्तोऽपि

पात् । आलोक्य कानन दिव्यं, सश्रितस्वादिदम्भया ॥ ५४६ ॥ रामपुत्राश्च मे यावद्विनीतामादुकारिणः । वदन्तो देव देवेति, दर्शयन्ति
वनभियम् ॥ ५४७ ॥ तावदेषा महाभागा, सुसाध्वीपरिवारिता । आगच्छन्ती महाभद्रे', महाभद्रा विलोकिता ॥ ५४८ ॥ चक्षुर्भिः
कलापकम् । अथ निःशेषरूपेभ्यो, व्यावृत्ता कीलितेव मे । अस्यां निपतिता दृष्टिः, स्वभावादत्यन्तनिर्मला ॥ ५४९ ॥ एषापि मां मप-
श्यन्ती, सपद्मा स्नेहनिर्भरा । निःस्पृहापि महाभागा, पूर्वाभ्यासेन सुन्दरि ! ॥ ५५० ॥ अथ प्राप्ता ममाभ्यर्णे, चिन्तयन्ती गुरोर्वचः ।
मयं नरकगामीति, करुणाऽऽगतचेतना ॥ ५५१ ॥ ततः कन्दमुनिकाले गुणधारणेन सदा मया निरन्तरमेवाभोगरस्याभ्यस्ततया बहुमान
स्यानुशीलिततया विनयस्य प्रतिपन्नतया हृदयस्य भावितवया गौरवस्यानुष्ठिततया वत्सलभावस्य प्रादुर्भूतस्तावदस्ति मे विमर्शः यदुत—
केया पुनर्भगवती या दृष्टमात्रापि मे हृदयमेवमाह्लादयति नयने शीतलयति शरीरं निर्वापयति अमृतकुम्भ इव मां सिञ्चतीति, ततः कृतो
मया भगवत्याः शिरःप्रणामः दत्तोऽनया धर्मलाभाशीर्वादः, अभिहितं च—भो भो महाराज—मोक्षसम्प्रापके प्राप्ते, मानुष्ये हे नरो
त्तम ! । उन्मार्गगमनाद्वैव, गन्तुमन्यत्र युज्यते ॥ ५५२ ॥ निजकर्मोपरोधेन, तस्कराकारधारिणः । वध्यस्य नीयमानस्य, कृत्वा माधवि
स्मर्यताम् ॥ ५५३ ॥ किं राज्यं सुविलासाः के, के भोगाः का विभूतयः । किं वा स्वास्थ्यं ? महाराज', चिन्तयेदं सचेतसा ॥ ५५४ ॥
युग्मम् । किं च—मद्दर्शनात्तदा समुत्पन्नविमर्शायाः संजातमस्या भगवत्या महाभद्राया जातिस्मरणं स्मृतस्तेन कन्दमुनिकालादारभ्य
समस्तो वृत्तान्तः प्रादुर्भूतं तदनुसारेण शुभाध्यवसायादवधिज्ञानं दृष्टं तेन मदीयमपि विचरणं, ततोऽभिहितमनया—किं न स्मरसि रा-
जेन्द्र !, यत्तदा गुणधारणः । भवानुद्दामलीलाभिर्ललितस्त्वं ममाश्रयः ॥ ५५५ ॥ कान्त्यायन्तःपुरं प्राप्य, सुखसम्भारपूरितः । स्थितो
पद्मावराज्ये त्वं, तत्किं ते विस्मृतं किल ? ॥ ५५६ ॥ किं न निर्मलसूरीणां, वचनानि स्मरन्ति ते । भवप्रपञ्चो यैस्तुभ्यमनन्तोऽपि

तदन्तरङ्गं चौर्यं यन्मयाऽधुना विहितं ईदृशी च तत्र विडम्बना एवं चाह स्वगतं परगतं च वृत्तान्तमात्मानामीति, एतदाकर्ण्य वि
स्मिता सुललिता भाविता हृदये, पौण्डरीकेणापि गृहीतो मनाग्भावार्थः, ततोऽभिहितमनेन—आर्य! किं पुनरधुना ते चित्तवृत्तो वर्तते ?,
अनुसुन्दरेणोक्तं—आकर्णय—यावत्संवेगमापन्नः, प्रारब्धो निजचेष्टितम् । निवेदयितुमित्थं भोः, पुरतो भवतामहम् ॥ ५६५ ॥ तावच्चा
रित्रधर्मोऽसौ, स्वसैन्यपरिवारितः । प्रस्ताव इति विज्ञाय, चलितो मम सम्मुखम् ॥ ५६६ ॥ तेन चागच्छता—मानम्बित स्ववीर्येण,
पुरं सात्त्विकमानसम् । अत्यन्तशुभ्रतां नीतो, विवेकवरपर्वतः ॥ ५६७ ॥ शिखरं चाप्रमत्तत्वं, कृतमुच्चैस्तरं वरम् । उद्भासितं च भूयो
ऽपि, पुरं जैनं प्रतिष्ठितम् ॥ ५६८ ॥ स च चित्तसमाधानो, मण्डपोऽपि समारितः । सा च निःस्पृहतावेदिः, पुनः सम्यक् विनिर्मिता
॥ ५६९ ॥ तथोत्सर्गप्रभाभासि, जीववीर्यं वरासनम् । कृतं तेन स्वसैन्यं च, सर्वथा परितोषितम् ॥ ५७० ॥ ततश्चागच्छतस्तस्य, परि
पूर्णतयाऽध्वनि । सर्वमाणेन ततत्र, महामोहमहाबलम् ॥ ५७१ ॥ दृष्टं प्रत्यक्षतः सर्वं, तच्च युद्धं मयाऽद्भुतम् । ततः परिसरे रम्ये, चि
त्तवृत्तेरनीकयोः ॥ ५७२ ॥ ततः सद्बोधमुख्येन, सम्यग्दर्शनमुख्यया । मयाऽवष्टम्भितो भ्रात , स राजा जयभाजनम् ॥ ५७३ ॥ ततो
विघटिताशेषपरपक्षः स्वलीलया । महात्मजयपताकीकः, प्रभुराज्यं निपीड्य च ॥ ५७४ ॥ गृहीत्वाऽन्तःपुरं सर्वं, मामकीनं चिरन्तनम् ।
राजा चारित्रधर्मोऽसौ, मत्समीपमुपागतः ॥ ५७५ ॥ युग्मम् । ते च निर्नष्टसर्वस्वाः, किंचिच्छेषस्वजीविताः । दीनाः क्षीणा इव क्लीना,
महामोहादयः स्थिताः ॥५७६॥ चित्तवृत्ताविह भद्र!, वर्तते मम साम्प्रतम् । पञ्चत्रयः प्रलीनास्ते, प्राप्ता वरबान्धवाः ॥५७७॥ युग्मम् ।
अन्यच्च—अपथ्य त्रिजगन्मन्य, लिङ्ग सर्वप्रभाषितम् । अधुना पोषणीयोऽसौ, य पुण्यवर्गो मयाऽऽन्तरः ॥ ५७८ ॥ एवं च वदता तेनानु
सुन्दरराजेनोपसंहृत्य तदिङ्गितं तस्कररूपमाविर्भावितं स्वाभाविकं चक्रवर्तिस्वरूपं कृतसंहृतस्य निःशेषा तस्करविडम्बनासामग्री समायाता

